यामास—'असावगाधं जलं प्राप्तो मे वशः संजातः, मत्पृष्ठगतस्तिल-मात्रमपि चलितुं न शक्नोति; तस्मात्कथयाम्यस्य निजाभिप्रायम्, येनाभीष्टदेवतास्मरणं करोति।' आह च—'मित्र ! त्वं मया वधाय समानीतो भार्यावाक्येन विश्वास्य, तत्स्मर्यतामभीष्टदेवता।' स आह—'भ्रातः ! किं मया तस्यास्तवापि चापकृतं, येन मे वधोपायश्चिन्तितः ?।' मकर आह—'भोः ! तस्यास्तावत्तवहृदयस्यामृतमय फलरसास्वादनमिष्टस्य भक्षणे दोहदः संजातः; तेनैतदनुष्ठितम्।' प्रत्युत्पन्नमतिर्वानर आह—'भद्र ! यद्येवं तत्किं त्वया मम तत्रैव न व्याहृतम् ? येन स्वहृदयं जम्बूकोटरे सदैव मया यत्सुगुप्तं कृतम्, तद्भ्रातृपत्न्या अर्पयामि। त्वयाऽहं शून्यहृदयोऽत्र कस्मादानीतः ?' तदाकर्ण्य मकरः सानन्दमाह—'भद्र ! यद्येवं तदर्पय मे हृदयम्। येन सा दुष्टपत्नी तद्भक्षयित्वाऽनशनादुत्तिष्ठति। अहं त्वां तमेव जम्बूपादपं प्रापयामि।' एवमुक्त्वा निवर्त्य जम्बूतलमगात्। वानरोऽपि कथमपि जल्पितविविधदेवतोपचारपूजस्तीरमासादितवान्। ततश्चदीर्घतरचङ्क्रमणेन तमेव जम्बूपादपमारूढश्चिन्तयामास—'अहो ! लब्धास्तावत्प्राणाः। तन्ममैतदद्य पुनर्जन्मदिनमिव संजातम्।' इति चिन्तयमानं मकर आह—'भो मित्र ! अर्पय तद्धृदयं यथा ते भ्रातृपत्नी भक्षयित्वाऽनशनादुत्तिष्ठति।' अथ विहस्य निर्भर्त्सयन् वानरस्तमाह—'धिग्धिङ्मूर्ख विश्वासघातक ! किं कस्यचिद्धृदयद्वयं भवति ? तदाशु गम्यताम्। जम्बूवृक्षस्याधस्तात् न भूयोऽपि त्वयाऽत्रागन्तव्यम्।

उक्तं च यतः—

सकृद्दुष्टं च यो मित्रं पुनः संधातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा' ॥ ४ ॥

तच्छ्रुत्वा मकरः सविलक्ष चिन्तितवान्—'अहो, मयाऽतिमूढेन किमस्य स्वचित्ताभिप्रायो निवेदितः? तद्यद्यसौ पुनरपि कथंचिद्विश्वासं गच्छति, तद्भूयोऽपि विश्वासयामि ।' आह च—'मित्र ' हास्येन मया तेऽभिप्रायो लब्धः; तस्या न किंचित्तव हृदयेन प्रयोजनम् । तदागच्छ प्राघुणिकन्यायेनास्मद्गृहम्; तव भ्रातृपत्नी सोत्कण्ठा वर्तते ।' वानर आह—'भो दुष्ट ' गम्यताम् । अधुना नाहमागमिष्यामि । उक्तं च,—

बुभुक्षितः किं न करोति पापं,
क्षीणा नरा निष्करुणा भवन्ति ।
आख्याहि भद्रे ' प्रियदर्शनस्य
न गङ्गदत्तः पुनरेति कूपम्' ॥ ५ ॥

मकर आह—'कथमेतत्?' स आह—

## [ क्षीणनिष्कारुण्ये मण्डूकराज-सर्पकथा १ ]

'कस्मिंश्चित्कूपे गङ्गदत्तो नाम मण्डूकराजः प्रतिवसति स्म । स कदाचिद्दायादैरुद्वेजितोऽरघट्टघटीमारुह्य निष्क्रान्तः । अथ तेन चिन्तितम्—'यत्कथं तेषां दायादानां मया प्रत्यपकारः कर्तव्यः? उक्तं च,—

आपदि येनापकृतं येन च हसितं दशासु विषमासु ।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये' ॥ ६ ॥

एवं चिन्तयन्निश्चले प्रविशन्तं कृष्णसर्पमपश्यत्। तं दृष्ट्वा भूयोऽप्यचिन्तयत्—'यदेनं तत्र कूपे नीत्वा सकलदायादानामुच्छेदं करोमि। एवं स विभाव्य बिलद्वारं गत्वा तमाहूतवान्—'एह्येहि प्रियदर्शन! एहि।' तच्छ्रुत्वा सर्पश्चिन्तयामास—'य एव मामाह्वयति स स्वजातीयो न भवति। यतो नैषा सर्पवाणी। अन्येन केनापि सह मम मर्त्यलोके संधानं नास्ति। तदत्रैव दुर्गे स्थितस्तावद्वेद्मि—कोऽयं भविष्यति। उक्तं च,—

यस्य न ज्ञायते शीलं न कुलं न च संश्रयः।
न तेन संगतिं कुर्यादित्युवाच बृहस्पतिः॥ ७॥

कदाचित्कोऽपि मन्त्रवाद्योषधिचतुरो वा मामाहूय बन्धने क्षिपति। अथवा कश्चित्पुरुषो वैरमाश्रित्य कस्यचिद्भक्षणार्थे मामाह्वयति।' आह च—'भोः! को भवान्?' स आह—'अहं गङ्गदत्तो नाम दण्डुकाधिपतिस्त्वत्सकाशे मैत्र्यर्थमभ्यागतः।' तच्छ्रुत्वा सर्प आह—'भोः अश्रद्धेयमेतत्,—तृणानां वह्निना सह संगमः।

गङ्गदत्त आह—'भोः! सत्यमेतत्। स्वभाववैरी त्वमस्माकम्, परं परपरिभवात्प्राप्तोऽहं ते सकाशम्। उक्तं च,—

सर्वनाशे च संजाते प्राणानामपि संशये।
अपि शत्रुं प्रणम्यापि रक्षेत् प्राणान्धनानि च॥ ८॥

सर्प आह—'कथय कस्मात्ते परिभवः?' स आह—'दायादेभ्यः।' सोऽप्याह—'क्व त आश्रयो वाप्यां कूपे तडागे ह्रदे वा?

तत्कथय स्वाश्रयम्।' तेनोक्तम्—'पाषाणचयनिबद्धे कूपे।' सर्प आह—'अहो, अपदा वयम्, तन्नास्ति तत्र मे प्रवेशः; प्रविष्टस्य च स्थानं नास्ति, यत्र स्थितस्तव दायादान्व्यापादयामि, तद्गम्यताम्। गङ्गदत्त आह—'भोः! समागच्छ त्वम्। अहं सुखोपायेन तत्र तव प्रवेशं कारयिष्यामि। तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरमस्ति। तत्र स्थितस्त्वं लीलया दायादान्व्यापादयिष्यसि।' तच्छ्रुत्वा सर्पो व्यचिन्तयत्—'अहं तावत्परिणतवयाः कदाचित्कथंचिन्मूषकमेकं प्राप्नोमि, तत्सुखावहो जीवनोपायोऽयमनेन कुलाङ्गारेण मे दर्शितः; तद्गत्वा तान्मण्डूकान्भक्षयामि इति। एवं विचिन्त्य तमाह—'भो गङ्गदत्त! यद्येवं तदग्रे भव, येन तत्र गच्छावः।' गङ्गदत्त आह—'भोः प्रियदर्शन! अहं त्वां सुखोपायेन तत्र नेष्यामि, स्थानं च दर्शयिष्यामि; परं त्वयाऽस्मत्परिजनो रक्षणीयः, केवलं यानहं तव दर्शयिष्यामि, त एव भक्षणीयाः' इति। सर्प आह—'सांप्रतं त्वं मे मित्रं जातम्, तन्न भेतव्यम्। तव वचनेन भक्षणीयास्ते दायादाः।' एवमुक्त्वा बिलान्निष्क्रम्य तमालिङ्ग्य च तेनैव सह प्रस्थितः। अथ कूपमासाद्यारघट्टघटिकामार्गेण सर्पस्तेनात्मना सह स्वालयं नीतः। ततश्च गङ्गदत्तेन कृष्णसर्पं कोटरे धृत्वा दर्शितास्ते दायादाः। ते च तेन शनैःशनैर्भक्षिताः। अथ मण्डूकाभावे सर्पेणाभिहितम्—'भद्र! निःशेषितास्ते रिपवः। तत्प्रयच्छान्यन्मे किंचिद्भोजनम्, यतोऽहं त्वयाऽत्रानीतः।' गङ्गदत्त आह—'भद्र! कृतं त्वया मित्रकृत्यम्,

तत्सांप्रतमनेनैव घटिकायन्त्रमार्गेण गम्यताम्' इति । सर्प आह—'भो गङ्गदत्त ! न सम्यगभिहितं त्वया । कथमहं तत्र गच्छामि ? मदीयबिलदुर्गमन्येन रुद्धं भविष्यति । तस्मादत्रस्थस्य मे मण्डूकमेकैकं स्ववर्गीयं प्रयच्छ; नो चेत्सर्वानपि भक्षयिष्यामि' इति । तच्छ्रुत्वा गङ्गदत्तो व्याकुलमना व्यचिन्तयत्—'अहो ! किमेतन्मया कृतं सर्पमानयता ? तद्यदि निषेधयिष्यामि तत्सर्वानपि भक्षयिष्यति । एवं निश्चित्य नित्यमेकैकं तमादिशति । सोऽपि तं भक्षयित्वा तस्य परोक्षेऽन्यानपि भक्षयति । अथवा साध्विदमुच्यते—

यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते ।
एवं चलितवित्तस्तु विलशेषं न रक्षति' ॥ ६ ॥

अथान्यदिने तेनापरान्मण्डूकान्भक्षयित्वा गङ्गदत्तसुतो यमुनादत्तो भक्षितः । तं भक्षितं ज्ञात्वा गङ्गदत्तस्तारस्वरेण धिग्धिगिति प्रलापपरः कथंचिदपि न विरराम । ततः स्वपत्न्याभिहितः तदद्यापि विचिन्त्यतामात्मनो निष्क्रमणम्, अस्य वधोपायं च ।' अथ गच्छता कालेन सकलमपि कवलितं मण्डूककुलम् । केवलमेको गङ्गदत्तस्तिष्ठति । ततः प्रियदर्शनेन भणितम्—'भो गङ्गदत्त ! बुभुक्षितोऽहम् । निःशेषिताः सर्वे मण्डूकाः, तद्दीयतां मे किंचिद्भोजनं यतोऽहं त्वयाऽत्रानीतः ।' स आह—'भो मित्र ! न त्वयाऽत्र विषये मय्यवस्थिते कापि चिन्ता कार्या, तद्यदि मां प्रेषयसि ततोऽन्यकूपस्थानपि मण्डूकान्विश्वास्या-

आनयामि ।' स आह—'मम तावत्त्वमभक्ष्यो भ्रातृस्थाने, तद्यद्येवं करोषि तत्सांप्रतं पितृस्थाने भवसि, तदेवं क्रियताम्' इति । सोऽपि तदाकर्ण्यारघट्टघटिकामाश्रित्य विविधदेवतोपकल्पितपूजोपचायितस्तस्मात्कूपाद्विनिष्क्रान्तः । प्रियदर्शनोऽपि तदागमनकाङ्क्षया तत्रस्थः प्रतीक्षमाणस्तिष्ठति । अथ चिरादनागते गङ्गदत्ते प्रियदर्शनोऽन्यकोटरनिवासिनीं गोधामुवाच—'भद्रे ! क्रियतां स्तोकं साहाय्यम् । यतश्चिरपरिचितस्ते गङ्गदत्तः, तद्गत्वा तत्सकाशं कुत्रचिज्जलाशयेऽन्विष्य मम संदेशं कथय। येनागम्यतामेकाकिनापि भवता द्रुततरम्, यद्यन्ये मण्डूका नागच्छन्ति । अहं त्वया विना नात्र वस्तुं शक्नोमि । तथा यद्यहं तव विरुद्धमाचरामि तत्सुकृतमन्तरे मया विधृतम् ।' गोधापि तद्वचनाद्गङ्गदत्तं द्रुततरमन्विष्याह—'भद्र गङ्गदत्त ! स तव सुहृत्प्रियदर्शनस्तव मार्गं समीक्षमाणस्तिष्ठति, तच्छीघ्रमागम्यतामिति। अपरं च,—तेन तव विरुद्धकरणे सुकृतमन्तरे धृतम् । तन्निःशङ्केन मनसा समागम्यताम् ।' तदाकर्ण्य गङ्गदत्त आह—

बुभुक्षितः किं न करोति पापं ?
क्षीणा नरा निष्करुणा भवन्ति ।
आख्याहि भद्रे ! प्रियदर्शनस्य
न गङ्गदत्तः पुनरेति कूपम् ॥ १० ॥

एवमुक्त्वा स तां विसर्जयामास ॥ तद्भो दुष्टजलचर ! अहमपि गङ्गदत्त इव त्वद्गृहे न कथंचिदपि यास्यामि ।' तच्छ्रुत्वा मकर आह—

'भो मित्र ! नैतद्युज्यते । सर्वथैव मे कृतघ्नतादोषमपनय मद्गृहागमनेन; अथवाऽत्राहमनशनात्प्राणत्यागं तवोपरि करिष्यामि ।'

अथैवं तेन सह वदतो मकरस्य जलचरेणैकेनागत्याभिहितम्—'भो मकर ! त्वदीया भार्याऽनशनोपविष्टा त्वयि चिरयति प्रणयाभिभवाद्विपन्ना ।' एवं तद्वज्रपातसदृशवचनमाकर्ण्यातीव व्याकुलितहृदयः प्रलपितमेवं चकार—'अहो, किमिदं संजातं मे मन्दभाग्यस्य । उक्तं च,—

माता यस्य गृहे नास्ति, भार्या च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं, यथाऽरण्यं तथा गृहम् ॥ ११ ॥

तन्मित्र ! क्षम्यताम् । मया तेऽपराधः कृतः । संप्रत्यहं तु स्त्रीवियोगाद्वैश्वानरप्रवेशं करिष्यामि ।' तच्छ्रुत्वा वानरः प्रहसन्प्रोवाच—'भोः, ज्ञातो मया प्रथममेव स्त्रीवश्यः यस्त्वं स्त्रीजितश्च । सांप्रतं च प्रत्ययः संजातः । तन्मूढ ! आनन्देऽपि जाते त्वं विषादं गतः ? तादृशभार्यायां मृतायामुत्सवः कर्तुं युज्यते । मकर आह—'भो मित्र ! अस्त्वेतत् ; परं किं करोमि ? ममानर्थद्वयमेतत्संजातम् एकस्तावद्गृहभङ्गः, अपरस्त्वद्विधेन मित्रेण सह चित्तविश्लेषः । अथवा भवत्येवं दैवयोगात् । एवं तस्य कथयतः पुनरन्येन जलचरेणागत्य निवेदितम्—'यदहो, त्वदीयं गृहमप्यपरेण महामकरेण गृहीतम् ।' तच्छ्रुत्वाऽसावतिदुःखित मनास्तं गृहान्निःसारयितुमुपायं चिन्तयन्नुवाच—'अहो, पश्यतां मे दैवोपहतत्वम् ।

क्षते प्रहारा निपतन्त्यभीक्ष्ण-
मन्नक्षये वर्धति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति,
वामे विधौ सर्वमिदं नराणाम् ॥ १२ ॥

तत्किं करोमि ? किमनेन सह युद्धं करोमि ? किं वा साम्नैव संबोध्य गृहान्निःसारयामि ? किं वा भेदं दानं वा करोमि ? अथवाऽमुमेव वानरमित्रं पृच्छामि । उक्तं च,—

य : पृष्ट्वा कुरुते कार्यं प्रष्टव्यान्स्वहितान्गुरून् ।
न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि' ॥ १३ ॥

एवं संप्रधार्य भूयोऽपि तमेव जम्बूवृक्षमारूढं कपिमपृच्छत्—'भो मित्र ! पश्य मे मन्दभाग्यताम् । यत्संप्रति गृहमपि मे बलवत्तरेण मकरेण रुद्धम् । तदहं त्वां प्रष्टुमभ्यागतः । कथय किं करोमि । सामादीनामुपायानां मध्ये कस्यात्र विषयः ?' । स आह—'भोः कृतघ्न पापचारिन् ! मया निषिद्धोऽपि किं भूयो मामनुसरसि ? नाहं तव मूर्खस्योपदेशमपि दास्यामि ।' तच्छ्रुत्वा मकरः प्राह—'भो मित्र ! सापराधस्य मे पूर्वस्नेहमनुस्मृत्य हितोपदेशं देहि ।' वानर आह—'नाहं ते कथयिष्यामि । यद्भार्यावाक्येन भवताऽहं समुद्रे प्रक्षेप्तुं नीतः । तदेव न युक्तम् । यद्यपि भार्या सर्वलोकादपि वल्लभा भवति तथापि न मित्राणि बान्धवाश्च भार्यावाक्येन समुद्रे प्रक्षिप्यन्ते । तन्मूर्ख ! मूढत्वेन नाशस्तव प्रागेव निवेदित आसीत् ।

अथ तच्छ्रुत्वा मकरः प्राह—'भद्र ! सर्वथा कृतघ्नस्यापि मे कुरु प्रसादमुपदेशप्रदानेन । उक्तं च,—

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ? ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते' ॥ १४ ॥

तदाकर्ण्य वानरः प्राह—'भद्र ! यद्येवं तर्हि तत्र गत्वा तेन सह युद्धं कुरु । सोऽपि मकरस्तदुपदेशं श्रुत्वा कृतमरणनिश्चयो वानरमनुज्ञाप्य स्वाश्रयं गतः' तत्र च तेन स्वगृहप्रविष्टेनाततायिना सह विग्रहं कृत्वा दृढसत्त्वावष्टम्भनाच्च व्यापाद्य स्वाश्रयं च लब्ध्वा सुखेन चिरकालमतिष्ठत् ।

## इति पंचतंत्र-कथासारे लब्धप्रणाशं नाम चतुर्थं तन्त्रं समाप्तम् ।

---

# अपरीक्षितकारकम् ५

अथेदमारभ्यतेऽपरीक्षितकारकं नाम पञ्चमं तन्त्रम् , यस्यायमादिमः श्लोकः—

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम् ।
तन्नरेण न कर्तव्यं नापितेनात्र यत्कृतम् ॥ १ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे पाटलिपुत्रं नाम नगरम्। तत्र मणिभद्रो नाम श्रेष्ठी प्रतिवसति स्म । तस्य च धर्मार्थकाममोक्षकर्माणि कुर्वतो विधिवशाद्धनक्षयः संजातः । ततो विभवक्षयादपमानपरम्परया परं विषादं गतः । अथान्यदा रात्रौ सुप्तश्चिन्तितवान्—'अहो धिगियं दरिद्रता । उक्तं च,—

शीलं शौचं क्षान्तिर्दाक्षिण्यं मधुरता कुले जन्म ।
न विराजन्ति हि सर्वे वित्तविहीनस्य पुरुषस्य ॥ २ ॥
गगनमिव नष्टतारं, शुष्कमिव सरः, श्मशानमिव रौद्रम् ।
प्रियदर्शनमपि रूक्षं भवति गृहं धनविहीनस्य ॥ ३ ॥

एवं संप्रधार्य भूयोऽप्यचिन्तयत्—'तदहमनशनं कृत्वा प्राणानुत्सृजामि; किमनेन नो व्यर्थजीवितव्यसनेन ?' एवं निश्चयं कृत्वा सुप्तः । अथ तस्य स्वप्ने पद्मनिधिः क्षपणकरूपी दर्शनं गत्वा प्रोवाच—'भोः श्रेष्ठिन्! मा त्वं वैराग्यं गच्छ। अहं पद्मनिधिस्तव पूर्वपुरुषोपार्जितः।

तदनेनैव रूपेण प्रातस्त्वद्गृहमागमिष्यामि । तत्त्वयाऽहं लगुडप्रहारेण शिरसि ताडनीयः, येन कनकमयो भूत्वाऽक्षयो भवामि ।' अथ प्रातः प्रबुद्धः सन् स्वप्नं स्मरंश्चिन्ताचक्रमारूढस्तिष्ठति—'अहो सत्योऽयं स्वप्नः किंवा असत्यो भविष्यति, न ज्ञायते । अथवा नूनं मिथ्या भाव्यम्, यतोऽहं केवलं वित्तमेव चिन्तयामि । उक्तं च,—

व्याधितेन सशोकेन चिन्ताग्रस्तेन जन्तुना ।
कामार्तेनाथ मत्तेन दृष्टः स्वप्नो निरर्थकः' ॥ ४ ॥

एतस्मिन्नन्तरे तस्य भार्यया कश्चिन्नापितः पादप्रक्षालनायाहूतः । अत्रान्तरे च यथानिर्दिष्टः क्षपणकः सहसा प्रादुर्बभूव । अथ स तमालोक्य प्रहृष्टमना यथासन्नकाष्ठदण्डेन तं शिरस्यताडयत् । सोऽपि सुवर्णमयो भूत्वा तत्क्षणाद्भूमौ निपतितः । अथ स श्रेष्ठी निभृतं स्वगृहमध्ये कृत्वा नापितं संतोष्य प्रोवाच—'तदेतद्धनं वस्त्राणि च मया दत्तानि गृहाण । 'भद्र ! पुनः कस्यचिन्नाख्येयो वृत्तान्तः ।' नापितोऽपि स्वगृहं गत्वा व्यचिन्तयत—'नूनमेते सर्वेऽपि नग्नकाः शिरसि दण्डहताः काञ्चनमया भवन्ति । तदहमपि प्रातः प्रभूतानाहूय लगुडैः शिरसि हन्मि, येन प्रभूतं हाटकं मे भवति ।' एवं चिन्तयतो महता कष्टेन निशाऽतिचक्राम ! अथ प्रभातेऽभ्युत्थाय बृहल्लगुडमेकं प्रगुणीकृत्य क्षपणकविहारं गत्वा जिनेन्द्रस्य प्रदक्षिणत्रयं विधाय जानुभ्यामवनिं गत्वा वक्त्रद्वारन्यस्तोत्तरीयाञ्चलस्तारस्वरेणेमं श्लोक-

मपठत्—

सा जिह्वा या जिनं स्तौति, तच्चित्तं यज्जिने रतम् ।
तावेव च करौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥ ५ ॥

एवं संस्तुत्य ततः प्रधानक्षपणकमासाद्य क्षितिनिहितजानुचरणः, 'नमोऽस्तु, वन्दे' इत्युच्चार्य लब्धधर्मवृद्ध्याशीर्वादः उत्तरीयनिबद्ध-ग्रन्थिः सप्रश्रयमिदमाह—'भगवन् ! अद्य विहरणक्रिया समस्तमुनिसमेतेनास्मद्गृहे कर्तव्या ।' स आह—'भोः श्रावक ! धर्मज्ञोऽपि किमेवं वदसि ? किं वयं ब्राह्मणसमाना यत आमन्त्रणं करोषि ? वयं सदैव तत्कालपरिचर्यया भ्रमन्तो भक्तिभाजं श्रावकमवलोक्य तस्य गृहे गच्छामः । तेन कृच्छ्रादभ्यर्थितास्तद्गृहे प्राणधारणमात्रामशनक्रियां कुर्मः, तद्गम्यताम् । नैवं भूयोऽपि वाच्यम् ।' तच्छ्रुत्वा नापित आह—'भगवन् ! वेद्म्यहं युष्मद्धर्मम् । परं भवतो बहुश्रावका आह्वयन्ति । सांप्रतं पुनः पुस्तकाच्छादनयोग्यानि कर्पटानि बहुमूल्यानि प्रगुणीकृतानि । तथा पुस्तकानां लेखनाय लेखकानां च वित्तं संचितमास्ते, तत्सर्वथा कालोचितं कार्यम् ।' ततो नापितोऽपि स्वगृहं गतः । तत्र च गत्वा खादिरमयं लगुडं सज्जीकृत्य कपाटयुगलं द्वारि समाधाय सार्धप्रहरैकसमये भूयोऽपि विहारद्वारमाश्रित्य सर्वान्क्रमेण निष्क्रामतो गुरुप्रार्थनया स्वगृहमानयत् । तेऽपि सर्वे कर्पटवित्तलोभेन भक्तियुक्तानपि परिचितश्रावकान्परित्यज्य प्रहृष्टमनसस्तस्य पृष्ठतो ययुः । अपरं गृहमध्ये तान्प्रवेश्य द्वारं निभृतं

विधाय लगुडप्रहारैः शिरस्यताडयत् । तेऽपि ताड्यमाना एके मृताः, अन्ये भिन्नमस्तकाः फूत्कर्तुमुपचक्रमिरे । अत्रान्तरे तमाक्रन्दमाकर्ण्य कोटरक्षपालैरभिहितम्—'भो भोः ! किमयं महान्कोलाहलो नगरमध्ये ? तद्गम्यतां गम्यताम् ।' ते च सर्वे तदादेशकारिणस्तत्सहिता वेगात्तद्गृहं गता यावत्पश्यन्ति, तावद्रुधिरप्लावितदेहाः पलायमाना नग्नका दृष्टाः । पृष्टाश्च—'भोः ! किमेतत् ?' ते प्रोचुर्यथावस्थितं नापितवृत्तान्तम् । तैरपि स नापितो बद्धो हतशेषैः सह धर्माधिष्ठानं नीतः । तैर्नापितः पृष्टः—'भोः ! किमेतद्भवता कुकृत्यमनुष्ठितम् ?' स आह—'किं करोमि ? मया श्रेष्ठिमणिभद्रगृहे दृष्ट एवंविधो व्यतिकरः ।' सोऽपि सर्वं मणिभद्रगृहवृत्तान्तं यथादृष्टमकथयत् । ततः श्रेष्ठिनमाहूय भणितवन्तः—'भोः श्रेष्ठिन् ! किं त्वया कश्चित्क्षपणको व्यापादितः ?' ततस्तेनापि सर्वः क्षपणकवृत्तान्तस्तेषां निवेदितः । अथ तैरभिहितम्—'अहो, शूलमारोप्यतामसौ दुष्टात्मा कुपरीक्षितकारी नापितः ।' अथवा साध्विदमुच्यते—

अपरीक्ष्य न कर्तव्यं कर्तव्यं सुपरीक्षितम् ।
पश्चाद्भवति संतापो ब्राह्मण्यां नकुलार्थतः' ॥ ६ ॥

मणिभद्र आह—'कथमेतत् ?' ते धर्माधिकारिणः प्रोचुः—

## [अनालोच्य कर्माचरणे ब्राह्मणसुत–नकुलकथा १]

कस्मिंश्चिदधिष्ठाने देवशर्मा नाम ब्राह्मणः प्रतिवसति स्म । तस्य

भार्या प्रसूता सुतमजनयत्। तस्मिन्नेव दिने नकुली नकुलं प्रसूय मृता। अथ सा सुतवत्सला दारकवन्नमपि नकुलं स्तन्यदानाभ्यङ्गमर्दनादिभिः पुपोष। परं तस्य न विश्वसिति यत्कदाचिदेष स्वजातिदोषवशादस्य दारकस्य विरुद्धमाचरिष्यतीति। एवं जानाति स्वचित्ते।

अथ सा कदाचिच्छय्यायां पुत्रं शाययित्वा जलकुम्भमादाय पतिमुवाच—'ब्राह्मण! जलार्थमहं तडागे यास्यामि, त्वया पुत्रोऽयं नकुलाद्रक्षणीयः।' अथ तस्यां गतायां पृष्ठे ब्राह्मणोऽपि शून्यं गृहं मुक्त्वा भिक्षार्थं क्वचिन्निर्गतः। अत्रान्तरे दैववशात्कृष्णसर्पो बिलान्निष्क्रान्तः। नकुलोऽपि तं स्वभाववैरिणं गत्वा भ्रातू रक्षणार्थं सर्पेण सह युद्ध्वा सर्पं खण्डशः कृतवान्। ततो रुधिराप्लावितवदनः सानन्दं स्वव्यापारप्रकाशनार्थं मातुः संमुखो गतः। मातापि तं रुधिरक्लिन्नमुखमवलोक्य शङ्कितचित्ता 'यदनेन दुरात्मना दारको भक्षितः' इति विचिन्त्य कोपात्तस्योपरि तं जलकुम्भं चिक्षेप। एवं सा नकुलं व्यापाद्य यावत्प्रलपन्ती गृह आगच्छति, तावत्सुतस्तथैव सुप्तस्तिष्ठति, समीपे कृष्णसर्पं खण्डशः कृतमवलोक्य पुत्रवधशोकेनात्मशिरो वक्षःस्थलं च ताडयितुमारब्धा। अत्रान्तरे ब्राह्मणो गृहीतनिर्वापः समायातो यावत्पश्यति, तावत्पुत्रशोकाभितप्ता ब्राह्मणी प्रलपति—'भो भो लोभात्मन्! लोभाभिभूतेन त्वया न कृतं मद्वचः; तदनुभव सांप्रतं पुत्रमृत्युदुःखवृक्षफलम्। अथवा साध्विदमुच्यते—

अतिलोभो न कर्तव्यो, लोभं नैव परित्यजेत् ।
अतिलोभाभिभूतस्य चक्रं भ्रमति मस्तके ॥ ७ ॥

ब्राह्मण आह—'कथमेतत् ?' सा आह—

## [ अतिलोभे चक्रधरकथा २ ]

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्राः परस्परं मित्रतां गता वसन्ति स्म । ते चापि दारिद्र्योपहताः परस्परं मन्त्रं चक्रुः—'अहो, धिगियं दरिद्रता । उक्तं च,—

वरं वनं व्याघ्रगजादिसेवितं
जनेन हीनं बहुकण्टकावृतम् ।
तृणानि शय्या परिधानवल्कलं,
न बन्धुमध्ये धनहीनजीवितम् ॥ ८ ॥

तद्गच्छामः कुत्रचिदर्थाय ।' इति संमन्त्र्य स्वदेशं पुरं च स्वसुहृत्सहितं बान्धवयुक्तं गृहं च परित्यज्य प्रस्थिताः । एवं क्रमेण गच्छन्तोऽवन्तीं प्राप्ताः । तत्र सिप्राजले कृतस्नाना महाकालं प्रणम्य यावन्निर्गच्छन्ति, तावद्भैरवानन्दो नाम योगी संमुखो बभूव । ततस्तं ब्राह्मणोचितविधिना संभाव्य तेनैव सह तस्य मठं जग्मुः । अथ तेन ते पृष्टाः—'कुतो भवन्तः समायाताः ? क्व यास्यथ ? किं प्रयोजनम् ?' ततस्तैरभिहितम्—'वयं सिद्धियात्रिकाः । तत्र यास्यामो यत्र धनाप्तिर्मृत्युर्वा भविष्यतीत्येव निश्चयः । तत्कथ्यतामस्माकं कश्चिद्धनोपायो विवरप्रवेश-शाकिनीसाधन-श्मशानसेवन-महामांसविक्रय-साधकवर्ति-प्रभृ-

तीनामेकतम इति । अद्भुतशक्तिर्भवान् श्रूयते । वयमप्यतिसाहसिकाः । उक्तं च,—

> महान्त एव महतामर्थं साधयितुं क्षमाः ।
> ऋते समुद्रादन्यः को बिभर्ति वडवानलम् ?' ॥ ६ ॥

भैरवानन्दोऽपि तेषां सिद्ध्यर्थं बहूपायं सिद्धवर्तिचतुष्टयं कृत्वाऽर्पयत् । आह च—'गम्यतां हिमालयदिशि । तत्र संप्राप्तानां यत्र वर्तिः पतिष्यति, तत्र निधानमसंदिग्धं प्राप्स्यथ । तत्र स्थानं खनित्वा निधिं गृहीत्वा व्याघुट्यताम् । तथानुष्ठिते तेषां गच्छतामेकतमस्य हस्ताद्वर्तिर्निपपात । अथासौ यावत्तं प्रदेशं खनति तावत्ताम्रमयी भूमिः । ततस्तेनाभिहितम्—'अहो, गृह्यतां स्वेच्छया ताम्रम् ।' अन्ये प्रोचुः—'भो मूढ ! किमनेन क्रियते ? तत्प्रभूतमपि दारिद्र्यं न नाशयति, तदुत्तिष्ठ । अग्रतो गच्छामः ।' सोऽब्रवीत्—'यान्तु भवन्तः । नाहमग्रे यास्यामि ।' एवमभिधाय ताम्रं यथेच्छया गृहीत्वा प्रथमो निवृत्तः । ते त्रयोऽप्यग्रे प्रस्थिताः । अथ किंचिन्मात्रं गतस्याग्रेसरस्य वर्तिर्निपपात । सोऽपि यावत्खनितुमारब्धस्तावद्रूप्यमयी क्षितिः । ततः प्रहर्षितः प्राह—'यद्भोभोः ! गृह्यतां यथेच्छया रूप्यम् । नाग्रे गन्तव्यम् ।' तावूचतुः—'भोः, पृष्ठतस्ताम्रमयी भूमिः, अग्रतो रूप्यमयी । तन्नूनमग्रे सुवर्णमयी भविष्यति । तदनेन प्रभूतेनापि दारिद्र्यनाशो न भवति, तदावामग्रे यास्यावः ।' एवमुक्त्वा द्वावप्यग्रे

प्रस्थितौ। सोऽपि स्वशक्त्या रूप्यमादाय निवृत्तः। तयोरपि गच्छतो-रेकस्याग्रे वर्तिः पपात। सोऽपि प्रहृष्टो यावत्खनति, तावत्सुवर्णभूमिं दृष्ट्वा द्वितीयं प्राह—'भो! गृह्यतां स्वेच्छया सुवर्णम्। सुवर्णाद-न्यन्न किंचिदुत्तमं भविष्यति। सह प्राह—'मूढ! न किंचिद्वेत्सि प्राक्ताम्रम्। ततो रूप्यम्, ततः सुवर्णम्; तन्नूनमतः परं रत्नानि भविष्यन्ति। येषामेकतमेनापि दारिद्र्यनाशो भवति, तदुत्तिष्ठ। अग्रे गच्छावः। किमनेन भारभूतेनापि प्रभूतेन? स आह—'गच्छतु भवान्। अहमत्र स्थितस्त्वां प्रतिपालयिष्यामि।' तथानुष्ठिते सोऽपि गच्छन्नेकाकी ग्रीष्मार्कप्रतापसंतप्ततनुः पिपासाकुलितः सिद्धिमार्ग-च्युत इतश्चेतश्च बभ्राम। अथ भ्राम्यन्स्थलोपरि पुरुषमेकं रुधिरप्ला-वितगात्रं भ्रमच्चक्रमस्तकमपश्यत्। ततो द्रुततरं गत्वा तमवोचत्—'भोः! को भवान्? किमेवं चक्रेण भ्रमता शिरसि तिष्ठसि? तत्कथय मे यदि कुत्रचिज्जलमस्ति।' एवं तस्य प्रवदतस्तच्चक्रं तत्क्षणात्तस्य शिरसो ब्राह्मणमस्तके चटितम्। स आह—'भद्र! किमेतत्?' स आह—'ममाप्येवमेवैतच्छिरसि चटितम्।' स आह—'तत्कथय कदै-तदुत्तरिष्यति। महती मे वेदना वर्तते।' स आह—'यदा त्वमिव कश्चिद्धृतसिद्धवर्तिरेवमागत्य त्वामालापयिष्यति, तदा तस्य मस्तके चटिष्यति।' स आह—'कियान्कालस्तवैव स्थितस्य?' स आह—'सांप्रतं को राजा धरणीतले?' स आह—'वीणावत्सराजः!' स आह—'अहं तावत्कालसंख्यां न जानामि। परं यदा रामो राजा-

ऽऽसीत्तदाहं दारिद्र्योपहतः सिद्धिवर्तिमादायानेन पथा समायातः। ततो मयान्यो नरो मस्तकधृतचक्रो दृष्टः, पृष्टश्च। ततश्चैतज्जातम्।' स आह—'भद्र! कथं तदैवं स्थितस्य भोजनजलप्राप्तिरासीत्?' स आह—'भद्र! धनदेन निधानहरणभयात्सिद्धानामेतद्भयं दर्शितम्। तेन कश्चिदपि नागच्छति। यदि कश्चिदायाति स क्षुत्पिपासानिद्रारहितो जरामरणवर्जितः केवलमेवं वेदनामनुभवतीति। तदाज्ञापय मां स्वगृहाय।' इत्युक्त्वा गतः। अथ तस्मिंश्चिरयति स सुवर्णसिद्धिस्तस्यान्वेषणपरस्तत्पदपंक्त्या यावत्किंचिद्वनान्तरमागच्छति, तावद्रुधिरप्लावितशरीरस्तीक्ष्णचक्रेण मस्तके भ्रमता सवेदनः क्वणन्नुपविष्टस्तिष्ठति। तत्समीपवर्तिना भूत्वा सबाष्पं पृष्टः—'भद्र! किमेतत्?' स आह—'विधिनियोगः।' स आह—'कथं तत्? कथय कारणमेतस्य।' सोऽपि तेन पृष्टः सर्वं चक्रवृत्तान्तमकथयत्। तच्छ्रुत्वाऽसौ तं विगर्हयन्निदमाह—'भोः निषिद्धस्त्वं मयानेकशो न शृणोषि मे वाक्यम्, तत्किं क्रियते? उक्तं च,—

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः॥ ४०॥

चक्रधर आह—'कथमेतत्?' सोऽब्रवीत्—

## [ व्यवहारबुद्धिशून्यत्वे मूर्खपण्डितकथा ३ ]

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वमापन्ना वसन्ति स्म। बालभावे तेषां मतिरजायत—'भोः! देशान्तरं गत्वा विद्यया उपार्जनं क्रियते।' अथान्यस्मिन्दिवसे ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कान्यकुब्जे गताः। तत्र च विद्यामठे गत्वा पठन्ति। एवं द्वादशाब्दानि यावदेकचित्ततया पठित्वा विद्याकुशलास्ते सर्वे संजाताः। ततस्तैश्चतुर्भिर्मिलित्वोक्तम्—'वयं सर्वविद्यापारङ्गताः, तदुपाध्यायमुत्कलापयित्वा स्वदेशे गच्छामः। तथैव क्रियताम्।' इत्युक्त्वा ब्राह्मणा उपाध्यायमुत्कलापयित्वानुज्ञां लब्ध्वा पुस्तकानि नीत्वा प्रचलिताः, यावत्किंचिन्मार्गं यान्ति तावद्द्वौ पन्थानौ समायातौ दृष्ट्वोपविष्टाः सर्वे। तत्रैकः प्रोवाच—'केन मार्गेण गच्छामः?' एतस्मिन्समये तस्मिन्पत्तने कश्चिद्वणिक्पुत्रो मृतः। तस्य दाहार्थे महाजनो गतोऽभूत्। ततश्चतुर्णां मध्यादेकेन पुस्तकमवलोकितम्—

'महाजनो येन गतः स पन्थाः।

इति। तन्महाजनमार्गेण गच्छामः।' अथ ते पण्डिता यावन्महाजनमेलापकेन सह यान्ति तावद्रासभः कश्चित्तत्र श्मशाने दृष्टः। अथ द्वितीयेन पुस्तकमुद्घाट्यावलोकितम्—

'उत्सवे व्यसने प्राप्ते दुर्भिक्षे शत्रुसंकटे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥ ११॥

तदहो अयमस्मदीयो बान्धवः ।' ततः कश्चित्तस्य ग्रीवायां लगति, कोऽपि पादौ प्रक्षालयति । अथ यावत्ते पण्डिता दिशावलोकनं कुर्वन्ति, तावत्कश्चिदुष्ट्रो दृष्टः । तैश्चोक्तम्—'एतत्किम् ?' । तावत्तृतीयेन पुस्तकमुद्घाट्योक्तम्—

'धर्मस्य त्वरिता गतिः ।

एष धर्मस्तावत् ।' चतुर्थेनोक्तम्—

'इष्टं धर्मेण योजयेत् ।

तद्बान्धवोऽयमस्माकं धर्मेण युज्यताम्' । अथ तैश्च रासभ उष्ट्रग्रीवायां बद्धः । तत्तु केनचिद्रजकस्याग्रे कथितम् । यावद्रजकस्तेषां मूर्खपण्डितानां प्रहारकरणाय समायातस्तावत्ते प्रनष्टाः । ततो यावदग्रे किंचित्स्तोकं मार्गं यान्ति, तावत्काचिन्नदी समासादिता । तत्तस्या जलमध्ये पलाशपत्रमायान्तं दृष्ट्वा पण्डितेनैकेनोक्तम्—

'आगमिष्यति यत्पत्रं तदस्मांस्तारयिष्यति ।'

एतत्कथयित्वा तत्पत्रस्योपरि पतितो यावन्नद्या नीयते तावत्तं नीयमानमवलोक्यानेन पण्डितेन केशान्तं गृहीत्वोक्तम्—

सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं, सर्वनाशो हि दुःसहः ॥ १२ ॥

इत्युक्त्वा तस्य शिरश्छेदो विहितः । अथ तैश्च पश्चाद्गत्वा कश्चिद्ग्राम आसादितः । तेऽपि ग्रामीणैर्निमन्त्रिताः पृथक्पृथग्गृहेषु नीताः । तत एकस्य सूत्रिका घृतखण्डसंयुक्ता भोजने दत्ता । ततो विचिन्त्य पण्डितेनोक्तम् यत्—

'दीर्घसूत्री विनश्यति।'

एवमुक्त्वा भोजनं परित्यज्य गतः। तथा द्वितीयस्य मण्डका दत्ताः। तेनाप्युक्तम्—

'अतिविस्तारविस्तीर्णं तद्भवेन्न चिरायुषम्।'

स च भोजनं त्यक्त्वा गतः। अथ तृतीयस्य वटिकाभोजनं दत्तम्। तत्रापि तेन पण्डितेनोक्तम्—

'छिद्रेष्वनर्था बहुलीभवन्ति।'

एवं ते त्रयोऽपि पण्डिताः क्षुत्क्षामकण्ठा लोकैर्हास्यमानास्ततः स्थानात्स्वदेशं गताः। अथ सुवर्णसिद्धिराह—'यत्त्वं लोकव्यवहारमजानन्मया वार्यमाणोऽपि न स्थितः, तत ईदृशीमवस्थामुपगतः। अतोऽहं ब्रवीमि—"अपि शास्त्रेषु कुशलाः" इति'॥ नैकान्ते बुद्धिरपि प्रमाणम्। सुवर्णसिद्धिराह—'यद्यप्येतदस्ति तथापि मित्रवचनमनुल्लङ्घनीयम्। परं किं क्रियते? निवारितोऽपि मया न स्थितोऽतिलोल्याद्विद्याहंकाराच्च। तच्छ्रुत्वा चक्रधर आह—भो मित्र! सत्यमेतत्। सर्वोऽपि जनोऽश्रद्धेयामाशापिशाचिकां प्राप्य हास्यपदवीं याति। एवं श्रुत्वा भूयोऽपि स चक्रधरमाह—'भो मित्र! प्रेषय मां येन स्वगृहं गच्छामि।'

चक्रधर आह—'भद्र! आपदर्थे धनमित्रसंग्रहः क्रियते, तन्मामेवंविधं त्यक्त्वा क्व यास्यसि? उक्तं च,—

यस्त्यक्त्वा सापदं मित्रं याति निष्ठुरतां सुहृत्।
कृतघ्नस्तेन पापेन नरके यात्यसंशयम्'॥ १३॥

सुवर्णसिद्धिराह—'भोः! सत्यमृतद्यदि गम्यस्थाने शक्तिर्भवति। एतत्पुनर्मनुष्याणामगम्यस्थानम्। नास्ति कस्यापि त्वामुन्मोचयितुं शक्तिः। अपरं,–यथा यथा चक्रभ्रमवेदनया तव मुखविकारं पश्यामि, तथा तथाऽहमेतज्जानामि यद्द्रागगच्छामि मा कश्चिन्ममाप्यनर्थो भवेदिति। तत्प्रेषय मां येन गृहं गच्छामि। त्वं पुनरनुभुङ्क्ष्वात्र स्थित एव लोभवृक्षफलम्।' चक्रधरः प्राह—'भोः! अकारणमेतत्। दैववशात्संपद्यते नृणां शुभाशुभम्। उक्तं च,—

दुर्गस्त्रिकूटः, परिखा समुद्रो,
रक्षांसि योधा, धनदाच्च वित्तम्।
शास्त्रं च यस्योशनसा प्रणीतं,
स रावणो दैववशाद्विपन्नः॥ १४॥

सुवर्णसिद्धिराह—'भोः! सत्यमेतत्; दैवानुकूलतया सर्वं कल्याणं संपद्यते। तथापि पुरुषेण सतां वचनं कार्यम्। न पुनरेवमेव यो वर्तते स त्वमिव विनश्यति। चक्रधर आह—सत्यमेतत तद्गच्छ गृहम्।

एवं श्रुत्वा सुवर्णसिद्धिस्तमनुज्ञाप्य स्वगृहं प्रति निवृत्तः॥

## इति पञ्चतन्त्र-कथासारेऽपरीक्षितकारकं नाम पञ्चमं तन्त्रं समाप्तम्।

# साधारण व्याकरण परिचय

## २ सन्धिज्ञान

अक्षरों के परस्पर मेल को सन्धि कहते हैं। सन्धि के विषय में कहा गया है—

संहितैक-पदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥

संहिता ( सन्धि ) एक पद के अन्दर, उपसर्ग और धातु में और समास में आवश्यक है, परन्तु वाक्य के अन्यान्य पदों में इसका करना वक्ता की इच्छा पर निर्भर है।

साधारणतया सन्धि तीन प्रकार की है—

स्वर-सन्धि, हल्-सन्धि, विसर्ग-सन्धि।

१—स्वर के स्वर से मेल को स्वर-सन्धि,
२—हल् के स्वर वा हल् से मेल को हल्-सन्धि,
३—विसर्ग के स्वर वा हल् से मेल को विसर्ग-सन्धि कहते हैं।

### (१) स्वर-सन्धिः अथवा अच्-सन्धि

स्वर-सन्धि के पाँच भेद हैं—दीर्घ, यण्, गुण, वृद्धि, अयादिचतुष्टय।

(क) दो समान-रूप अ, इ, उ, ऋ ( ह्रस्व वा दीर्घ ) के मेल से दीर्घसन्धि होती है। जैसे—दया+अर्णवः=दयार्णवः, राम+आज्ञा=**रामाज्ञा**,

श्री+इच्छा=श्रीच्छा; भानु+उदयः=भानूदयः, पितृ+ऋणम=पितॄणम्।

(ख) इ, उ, ऋ, वा लृ (ह्रस्व वा दीर्घ) के परे यदि कोई समान स्वर हो तो इ को य्, उ को व, ऋ को र् और लृ को ल् होता है। जैसे—हरि+आज्ञा=हर्याज्ञा, प्रभु+इच्छा=प्रभ्विच्छा, मातृ+आज्ञा=मात्राज्ञा, लृ+आकृतिः=लाकृतिः। (इस सन्धि को यण्-सन्धि कहते हैं।)

(ग) १—(ह्रस्व वा दीर्घ) अ के परे यदि इ (ह्रस्व वा दीर्घ) हो तो अ और इ के स्थान पर ए होता है। जैसे—राज+इन्द्रः=राजेन्द्रः, धन+ईशः=धनेशः।

२—अ (ह्रस्व वा दीर्घ) के परे यदि उ (ह्रस्व वा दीर्घ) हो तो अ और उ के स्थान पर ओ हो जाता है। जैसे—सूर्य+उदयः=सूर्योदयः, महा+उपकारः =महोपकारः।

३—अ (ह्रस्व वा दीर्घ) के परे यदि ऋ (ह्रस्व वा दीर्घ) हो तो अ और ऋ के स्थान पर अर् हो जाता है। जैसे—महा+ऋषिः=महर्षिः, तव+ऋणम्=तवर्णम।

४—अ (ह्रस्व वा दीर्घ) के परे यदि लृ हो तो अ और लृ के स्थान पर अल् होता है। जैसे—तव+लृकारः=तवल्कारः। इस सन्धि का प्रयोग बहुत कम होता है। (इस सन्धि को गुण-सन्धि कहते हैं)।

(घ) १—अ (ह्रस्व वा दीर्घ) के परे यदि ए वा ऐ हो तो अ और ए या ऐ के स्थान में ऐ होता है। जैसे—एक+एकम्=एकैकम्, मम+ऐश्वर्यम्=ममैश्वर्यम्।

२—अ (ह्रस्व वा दीर्घ) के परे यदि ओ वा औ हो तो अ और ओ या औ के स्थान पर औ हो जाता है। जैसे—तव+ओष्ठः=तवौष्ठः, चित्त+औदार्यम्=चित्तौदार्यम्। (इस सन्धि को वृद्धि-संधि कहते है।)

(ङ) ए के परे यदि कोई स्वर हो तो उसे अय्,
ओ के परे यदि कोई स्वर हो तो उसे अव्।
ऐ के परे यदि कोई स्वर हो तो उसे आय,
औ के परे यदि कोई स्वर हो तो उसे आव् होता है।

जैसे—शे+अनम्=शयनम्, भो+अति=भवति, नै+अकः=नायकः, पौ+अकः=पावकः।

अपवाद—पदान्त ए वा ओ के परे यदि अ हो तो अ का पूर्वरूप हो जाता है—अर्थात् अ नहीं रहता। जैसे—हरे+अत्र=हरेऽत्र, देवो+अब्रवीत्=देवोऽब्रवीत्।

अ के स्थान पर 'ऽ' चिह्न कर देते हैं। इसे अवग्रह कहते हैं।

## (२) हल्-सन्धि अथवा व्यंजन-संधि

हल्-सन्धि के अनुसार कई विकार होते हैं। यहाँ पर केवल आवश्यक ही दिये जाते हैं।

(क) पदान्त क, ट, त्, प् के परे यदि कोई स्वर हो या किसी वर्ग का तृतीय, चतुर्थ वर्ण या य, र, ल, व, ह में से कोई वर्ण हो तो क् को ग, ट् को ड्, त् को द् और प् को ब् (अपने वर्ग का तृतीय वर्ण) हो जाता है। जैसे—प्राक्+एव=प्रागेव, सम्राट+गच्छति=सम्राड् गच्छति, दूरात्+आगच्छति=दूरादागच्छति, अप्+ज=अब्जः।

(ख) पदान्त क्, च्, ट्, त्, प् के परे यदि कोई अनुनासिक वर्ण (ङ्, ञ्, ण्, न्, म्) हो तो उसे अपने वर्ण का पाँचवाँ वर्ण (क् को ङ्, च् को ञ, ट् को ण, त् को न्, प् को म्,) हो जाता है विकल्प से। जहाँ पाँचवाँ वर्ण नहीं होता वहाँ तीसरा होता है। जैसे—प्राक्+नमनम्=प्राङ्नमनम्, प्राग्न-

मनम्, सम्राट्+नमति=सम्राण् नमति, सम्राड् नमति, तत्+मम=तन्मम, तद्मम।

(ग) (१)—त् वा न् के परे ल हो तो त् और न् को ल् हो जाता है और न् के ल् से पूर्व स्वर पर ँ (चन्द्रबिन्दु) हो जाता है। जैसे—तत्+लाभः=तल्लाभः, महान्+लाभः=महाँल्लाभः।

(२)—त् से परे श् हो तो त् को च् और श् को छ हो जाता है। जैसे—तत्+श्रुत्वा=तच्छ्रुत्वा।

(घ) किसी वर्ग के पहले, दूसरे, तीसरे वा चौथे वर्ण से परे यदि ह हो तो ह को पूर्व वर्ण के वर्ग का चौथा वर्ण विकल्प से और पूर्व वर्ण को उसी वर्ग का तीसरा वर्ण हो जाता है। जैसे—वाक्+हरि=वाग्घरि, वाग्हरिः, सम्राट्+हतः=समाड्ढतः, सम्राड्हतः; तत्+हननम्=तद्धननम्, तद्हननम्; अप+हरणम्=अब्भरणम्, अब्हरणम्।

(ङ) पदान्त न् से परे यदि च् या छ हो तो न् को अनुस्वार और यदि ट् या ठ् हो तो न् को अनुस्वार और ष् और यदि त् या थ् हों तो न् को अनुस्वार और स् हो जाता है। जैसे—कस्मिन्+चित्=कस्मिंश्चित्, हसन्+चलति=हसंश्चलति, पाशान्+छिनत्ति=पाशांश्छिनत्ति, हसन्+टीकते=हसंष्टीकते, पठन्+तरुः=पठंस्तरुः।

(च) तवर्ग या स् से पहले या परे चवर्ग या श् हो तो तवर्ग को क्रमशः चवर्ग और स् को श् हो जाता है। जैसे—सत्+चित्=सच्चित्, याच्+ना=याञ्चा, धावन्+शशः=धावंश्छशः, तान्+जयति=ताञ्जयति।

(छ) न् से पूर्व कोई ह्रस्व स्वर हो और परे कोई स्वर हो तो न् को द्वित्व (दो न्) हो जाते हैं। जैसे—धावन्+अश्वः=धावन्नश्वः।

(ज) (१)—छ से पूर्व ह्रस्व स्वर हो तो छ से पूर्व च् (च्छ) जोड़ा जाता है। जैसे—वृक्ष+छाया=वृक्षच्छाया।

(२)—पदान्त दीर्घ स्वर से परे छ् हो तो छ् से पहले च् विकल्प से जोड़ा जाता है। जैसे—लक्ष्मी + छाया = लक्ष्मीछाया, लक्ष्मीच्छाया।

(भ) (१)—पदान्त म् से परे य र ल व श ष स ह में से कोई वर्ण हो तो म् को नित्य अनुस्वार होता है। जैसे—रामम् + वदति = रामं वदति, जलम् + स्रवति = जलं स्रवति।

(२)—पदान्त म् से परे यदि कोई वर्गीय वर्ण हो तो म् को अनुस्वार या परे के वर्ण के वर्ग का पाँचवाँ वर्ण हो जाता है। जैसे—किम् + करोति = किङ्करोति, किंकरोति। धनम् + ददाति = धनन्ददाति, धनं ददाति।

## (३) विसर्ग-सन्धिः

विसर्ग में प्रायः ये विकार होते हैं—

१—विसर्ग-लोप,

२—विसर्ग को उ,

३—विसर्ग को र्,

४—विसर्ग को स्, ष्, श्।

१—(क) विसर्ग के पूर्व यदि अ हो और परे अ-भिन्न कोई स्वर हो तो विसर्ग का लोप हो जाता है। (विसर्ग का लोप होने पर कोई सन्धि नहीं होती)। जैसे—रामः + उवाच = राम उवाच, अतः + एव = अतएव।

(ख) विसर्ग के पूर्व यदि आ हो और परे अ-भिन्न कोई स्वर अथवा किसी वर्ग के दूसरे, तीसरे और चौथे वर्णों में से कोई वर्ण या य, र, ल, व, ह में से कोई वर्ण हो तो विसर्ग का लोप हो जाता है। जैसे—देवाः + ऊचुः = देवा ऊचुः, जनाः + इच्छन्ति = जना इच्छन्ति, कन्याः + लज्जन्ते = कन्या लज्जन्ते।

(ग) सः और एषः के विसर्ग का लोप हो जाता है यदि परे अ-भिन्न कोई वर्ण हो। जैसे—सः + नृपतिः = स नृपतिः, सः + आह = स आह्।

(घ) भोः के विसर्ग का लोप हो जाता है यदि परे कोई स्वर या वर्गों के तीसरे, चौथे, पाँचवें वर्ण में से कोई वर्ण या य र ल व ह में से कोई वर्ण हो। भोः + राम = भो राम, भोः + उमापते = भो उमापते। विसर्ग का लोप होने पर फिर कोई सन्धि नहीं होती।

२—विसर्ग के पूर्व यदि अ हो और परे अ या वर्गों के तीसरे, चौथे, पाँचवें वर्णों में से कोई वर्ण या य र ल व ह में से कोई वर्ण हो तो विसर्ग को उ हो जाता है। जैसे—देवः + अवदत् = देव उ अवदत् और उसके पूर्ववर्ती अ को गुण ओ हो जाता है ( देवो अवदत् पदान्त स्वर से परे अ को पूर्वरूप हो जाता है ) देवोऽवदत्, रामः + वदति = रामो वदति।

३—विसर्ग के पूर्व यदि कोई अ-आ-भिन्न स्वर हो और परे वर्गों के तीसरे, चौथे, पाँचवें वर्णों में से कोई वर्ण या य र ल व ह में से कोई वर्ण हो तो विसर्ग को र् हो जाता है। जैसे—हरिः + आह = हरिराह, अग्निः + ज्वलति = अग्निर्ज्वलति।

४—(क) विसर्ग के परे यदि च् वा छ् हो तो विसर्ग को श्,
विसर्ग के परे यदि ट् वा ठ् हो तो विसर्ग को ष्,
विसर्ग के परे यदि त् वा थ् हो तो विसर्ग को स् होता है।

जैसे—हरिः + चलति = हरिश्चलति, धावितः + छागः = धवितश्छागः,
धनुः + टंकारः = धनुष्टंकारः। रामः + तरति = रामस्तरति,
हरिः + तृपितः = हरिस्तृपितः।

(ख) विसर्ग के परे श् हो तो विसर्ग को विकल्प से श्,
विसर्ग के परे ष् हो तो विसर्ग को विकल्प से ष्,
विसर्ग के परे स् हो तो विसर्ग को विकल्प से स् हो जाता है।

जैसे—अनित्यः संसारः=अनित्यस्संसारः, अनित्यः संसारः।

दिवसः+षष्ठः=दिवसष्षष्ठः, दिवसः षष्ठः।

प्रथमः+सर्गः=प्रथमस्सर्गः, प्रथमः सर्गः।

## समास

अनेक पदों के परस्पर मिलाप को समास कहते हैं।

समास उन्हीं पदों का होता है, जिनमें परस्पर संबंध होता है। समास होने पर प्रत्येक पद के अन्त की विभक्ति का लोप हो जाता है और समस्त पद के अन्त में केवल उचित विभक्ति आती है।

### समास के छः भेद होते हैं—

तत्पुरुष-समास, द्वन्द्व-समास, बहुव्रीहि-समास कर्मधारय-समास, द्विगु-समास, अव्ययीभाव-समास।

### (१) तत्पुरुष-समास

जब पूर्व पद में प्रथमा-भिन्न कोई विभक्ति हो और उत्तर पद में कोई प्रथमान्त संज्ञा-शब्द हो तो उनमें जो समास होता है उसे तत्पुरुष-समास कहते हैं। तत्पुरुष-समास प्रायः दो पदों में होता है।

तत्पुरुष-समास के छः भेद हैं—

द्वितीया-तत्पुरुष तृतीया-तत्पुरुष

चतुर्थी-तत्पुरुष पंचमी-तत्पुरुष

षष्ठी-तत्पुरुष सप्तमी-तत्पुरुष

जैसे—गृहम् +गतः=गृहगतः, असिना+छिन्नः=असिच्छिन्नः।

देवेभ्यः+बलिः=देवबलिः, धर्मात्+अपेतः=धर्मापेतः।

राज्ञः+पुरुषः=राजपुरुषः, वने+जातः=वनजातः।

### नञ्-तत्पुरुष

नञ् (अव्यय 'नहीं') यदि किसी पद से समस्त हो तो उसे नञ-तत्पुरुष कहते हैं।

किसी स्वर से पूर्व न को अन् और किसी व्यजन से पूर्व न को अ हो जाता है। जैसे—न अश्वः=अनश्वः, न सत्=असत्।

## (२) कर्मधारय-समास

कर्मधारय-समास में पूर्व पद विशेषण और उत्तर पद विशेष्य (सज्ञा) होता है। इसे तत्पुरुष का भेद माना जाता है।

कर्मधारय समस्त पद संज्ञापद होता है (यही इसकी बहुव्रीहि से विशेषता है)। जैसे—कृष्णः सर्पः=कृष्णसर्पः, शीतं जलम्=शीतजलम्, महान् पुरुषः=महापुरुषः (समास में महान् को महा हो जाता है।), महादेवः, महादेवी।

## (३) द्वन्द्व-समास

यदि एक से अधिक प्रथमान्त पद 'च' से जुड़े हों तो उनके मिलाप को द्वन्द्व समास कहते हैं।

समस्त पद यदि दो प्रथमान्त पदों से बना हो तो उसके अन्त मे द्विवचन अन्यथा बहुवचन आता है। जैसे—रामः च कृष्णः च=रामकृष्णौ, रामः च भरतः च शत्रुघ्नः च=राम-भरत-शत्रुघ्नाः। इसके इतरेतर, समाहार और एकशेष ये तीन भेद होते हैं।

## (४) बहुव्रीहि-समास

बहुव्रीहि-समास में पूर्व पद प्रायः विशेषण होता है और उत्तर पद विशेष्य। इसमें तीन पद होते हैं।

इसके विग्रह में यत् सर्वनाम के प्रथमा से भिन्न किसी रूप के प्रयोग की आवश्यकता रहती है।

बहुव्रीहि समस्त पद विशेषण होता है।

जैसे—अर्जितं धनं येन, सः=**अर्जित-धनः**, उपहृताः पशवः यस्मै, सः =**उपहृतपशुः**, निर्गतं जलं यस्मात्, सः=**निर्गतजलः**, मृतः पुत्रः यस्य, सः =**मृतपुत्रः**, विद्यमानं जलं यस्मिन्, तत्=**विद्यमानजलम्**।

## (५) द्विगु-समास

द्विगु-समास में पूर्व पद संख्यावाचक और उत्तर पद प्रथमान्त संज्ञापद होता है।

द्विगु (समाहार) अर्थ में आता है। इसके अन्त में नपुंसकलिंग-एकवचन ही आता है। कभी कभी ई प्रत्ययान्त स्त्रीलिंग भी आता है। जैसे—चतुर्णां युगानां समाहार=चतुर्युगम्, त्रयाणां लोकानां समाहारः=त्रिलोकी, शतस्य अब्दानां समाहारः=शताब्दी।

## (६) अव्ययीभाव-समास

अव्ययीभाव-समास में पूर्व पद अव्यय होता है और समस्त पद भी अव्यय बन जाता है। जैसे—कृष्णस्य समीपम्=उपकृष्णम्, अहनि अहनि= प्रत्यहम्, मक्षिकाणाम् अभावः=निर्मक्षिकम्। (अव्ययीभाव के विग्रह में किसी उपसर्ग या अव्यय के स्थान पर उसका अर्थ प्रकट करने वाला कोई शब्द और रखा जाता है।)

## प्रत्यय

प्रत्यय दो प्रकार के होते हैं कृदन्त और तद्धित।

## कृदन्त

मुख्य कृत्-प्रत्यय क्त (त), क्तवत् ( तवत् ), क्त्वा (त्वा), तुम् , तव्य तथा अनीय हैं।

क्त—गतः, हतः, हत्वा, पतितः, भूतः।

क्तवत्—गतवान् , हतवान् , पतितवान् , भूतवान् ।

क्त्वा—गत्वा, पतित्वा, भूत्वा।

तुम्—गन्तुम्, हन्तुम्, पतितुम्, भवितुम्।

तव्य—गन्तव्यम्, हन्तव्यम्, पतितव्यम्, भवितव्यम्।

अनीय—गमनीयम् , हननीयम् , पतनीयम् , भवनीयम् ।

इनमें पहले तीनों के रूप चलते हैं और शेष चार के नहीं।

ये प्रत्यय धातुओं से लगाये जाते हैं इसलिए इन्हें कृदन्त कहा जाता है।

## तद्धित प्रत्यय

तद्धित प्रत्ययों से अनेक शब्द अनेक अर्थों में बनते हैं। कई प्रत्ययों के लगने पर शब्द में कुछ परिवर्तन हो जाते हैं जिनमें पूर्व स्वर में वृद्धि विशेष है। इसके अनेक भेद हैं।

अ—वसुदेवस्य अपत्यम्=वासुदेवः, रघोः अपत्यम=राघवः, यादवः।

इ—दशरथस्य अपत्यं=दाशरथिः, मारुतिः।

एय—गंगाया अपत्यम्=गांगेयः, कौन्तेयः।

अ—प्रत्यय बहुत अर्थों में आता है। जैसे :—

सम्बन्ध—देवस्य अयम्=दैवः, नैशः।

स्वामी—पृथिव्याः स्वामी=पार्थिवः, पांचालः।

अध्ययन—व्याकरणम् अधीते=वैयाकरणः।

भाव—कुमारस्य भावः = कौमारम्, शैशवम्।

('अ से पूर्व शब्द के प्रथम स्वर में वृद्धि होती है)

इक—मासिकम्, साप्ताहिकम्, वार्षिकम्, दैनिकम्, नाविकः, नैयायिकः, नास्तिकः।

ईन—ग्रामीणः, नवीनः, कुलीनः, प्राचीनः।

ईय—भवदीयः, पाणिनीयः, स्वकीयः।

तन—सनातनः, पुरातनः, नूतनः।

ता—जनता, मृदुता, बन्धुता।

त्व—मृदुत्वम्, पुरुषत्वम्।

मय—हिरण्मयः, मृण्मयः।

इत—पुष्पितः, फलितः, पण्डितः, मूर्छितः।

इन्—दण्डिन्-दण्डी, अर्थी, सुखी।

मत्—बुद्धिमत्-बुद्धिमान्, मतिमान्।

वत्—धनवत्-धनवान्, गुणवान्।

इन प्रत्ययों को शब्दों से लगाया जाता है। अतः ये तद्धित कहलाते हैं।

## अव्यय

जिन शब्दों में कोई परिवर्तन नहीं होता उन्हें अव्यय कहा जाता है।

अव्ययों में से कुछ अव्यय उपसर्ग होते हैं। वे किसी अन्य शब्द के आरम्भ में ही प्रयुक्त होते हैं।

उपसर्ग-भिन्न अव्ययों का प्रयोग स्वतन्त्र होता है। ये—अथ, इति, एव, च, तथा, ननु, न, वा, मुहुः, यथा, यत्र, तत्र, तदा, यदि, तर्हि, इदानीम्, भृशम्, खलु आदि अनेक हैं

## उपसर्ग

उपसर्ग किसी शब्द के आदि में ही प्रयुक्त होकर व्यवहृत होते हैं। ये स्वतन्त्र प्रयुक्त नहीं होते। जिन शब्दों के पूर्व में ये आते हैं उनके अर्थ में कुछ भेद हो जाता है।

जैसे—वि लगने से विकार (परिवर्तन), प्र लगने से प्रकार (भेद), आ लगने से आकार (शक्ल) बनते हैं। इनमें उपसर्ग के कारण एक ही 'कार' शब्द में अर्थ-भेद हो गया है।

## कारक

संस्कृत में आठ कारक हैं। जिन्हें कर्ता, कर्म, करण, संप्रदान, अपादान, संबन्ध, अधिकरण तथा संबोधन कहते हैं। इनके प्रयोग से विभक्तियाँ बनती हैं। इनमें कर्ता और संबोधन दोनों का प्रयोग प्रथमा विभक्ति में होता है। शेषों का क्रमशः द्वितीया से सप्तमी तक प्रयोग होता है।

संस्कृत के पूर्ण ज्ञान के लिए इनका ठीक प्रयोग करना अत्यन्त आवश्यक है।

---

## लिंग परिवर्तन

संस्कृत में पुल्लिङ्ग, स्त्रीलिङ्ग और नपुंसकलिङ्ग, इस प्रकार तीन लिङ्ग हैं। लिङ्ग परिवर्तन में साधारणतया पुल्लिङ्ग से स्त्रीलिङ्ग बनाने के कुछ विशेष प्रत्यय हैं। ये साधारणतया तीन हैं, जिन्हें, आ, आनी या ई कहा जाता है। उदाहरण—

अजा, चटका, इन्द्राणी, भवानी, शूद्री, ब्राह्मणी, इत्यादि।

---

## धातुपाठ—साधारण परिचय

संस्कृत में धातुओं को दस भागों में विभक्त किया गया है। इनमें से प्रत्येक का नाम पहली धातु के नाम पर रखा गया है।

जैसे, भ्वादि, अदादि, जुहोत्यादि, दिवादि, स्वादि, तुदादि, रुधादि, तनादि, क्र्यादि तथा चुरादि।

धातुओं में निम्नलिखित का स्मरण करना आवश्यक है—

| | |
|---|---|
| भू=होना | दिव्=प्रकाश, गमन, खेलना |
| स्था=बैठना | नृत्=नाचना |
| पा=पीना | विद्=होना |
| दृश्=देखना | श्रु=सुनना |
| घ्रा=सूँघना | चि, वृ=चुनना |
| सद्=बैठना | तुद्=पीड़ा देना |
| बुध=जानना | मुच्=छोड़ना |
| पठ=पढ़ना | क्षिप्=फैंकना |
| स्मर=याद करना | रुध्=रोकना |
| व्रज=जाना | भुज=खाना |
| अद्=खाना | तन=फैलाना |
| हन्=मारना | कृ=करना |
| अस्=होना | क्री=खरीदना |
| हु=हवन करना | चुर=चुराना |
| भी=डरना | गण=गिनना |
| ह्री=शर्माना | कथ=कहना |

इन धातुओं का प्रयोग लट् (वर्तमान काल) लङ् (अनद्यतन भूत काल) लृट् (भविष्यत्) लोट (आज्ञा देने के अर्थ) विधि लिङ् (इच्छा प्रार्थना, निमन्त्रण आदि अर्थ) तीन कालों में तथा दो अवस्थाओं में करने का अभ्यास आवश्यक है।

## रूपावलि

कुछ आवश्यक शब्द (प्रातिपदिक) जिनके रूप विभक्तियों में करने का पूर्ण अभ्यास होना चाहिए।

अजन्त शब्द—

राम, लता, हरि, मति, पति, नदी, सखी, स्त्री, भानु, मातृ, पितृ, सुधी, सेनानी, गौ, रै, नौ, अक्षि, दधि, वारि इत्यादि।

हलन्त शब्द—

राजन्, आत्मन्, विद्वस्, मघवन्, युवन्, पार्थन्, वाच्, दिश्, मत्स्, चन्द्रमस् इत्यादि।

सर्वनाम शब्द—

इदम्, अदस्, युष्मद्, अस्मद्, किम्, तत्, एतत्, सर्व इत्यादि।

संख्यावाचक शब्द—

एक, द्वि, त्रि, चतुर।

---

## पंचतन्त्र-कथासार अन्तर्गत कतिपय आवश्यक पदों का सन्धिच्छेद

बहुशक्तिरुग्रशक्तिरनेकशक्तिश्चेति—बहुशक्तिः + उग्रशक्तिः + अनेकशक्तिः + च + इति ।

ज्ञातमेतद्भवद्भिर्यन्ममैते—ज्ञातम् + एतत् + भवद्भिः + यत् + मम + एते ।

समर्पयत्वेतान्—समर्पयतु + एतान् ।

द्राग्यथानन्यसदृशान्—द्राक् + यथा + अनन्यसदृशान् ।

वित्तेऽर्थोत्पत्त्युपायाश्चिन्तनीयाः—वित्ते + अर्थ + उत्पत्ति + उपायाः + चिन्तनीयाः ।

पुमाँल्लोके—पुमान + लोके ।

शिशिरतरैराप्यायितशरीरः—शिशिरतरैः + आप्यायितशरीरः ।

कतिपयैरहोभिर्हरवृषभइव—कतिपयैः + अहोभिः + हरवृषभः + इव ।

सदानुयायिनावास्ताम्—सदा + अनुयायिनौ + आस्ताम् ।

आकारैरिङ्गितैर्गत्या—आकारैः + इंगितैः + गत्या ।

कस्माच्चिरादृष्टोऽसि—कस्मात् + चिरात् + दृष्टः + असि ।

तत्रोद्यमसमर्थानामुत्साहः—तत्र + उद्यमसमर्थानाम् + उत्साहः ।

तच्छ्रुत्वा—तत् + श्रुत्वा ।

कदाचिद्दमनकोऽयमुभयवेतनो भूत्वा—कदाचित् + दमनकः + अयम् + उभयवेतनः + भूत्वा ।

स्वामिपादानामग्रेऽसत्यम्—स्वामीपादानाम + अग्रे + असत्यम् ।

तर्ह्यमात्यपदेऽध्यारोपितस्त्वम्—तर्हि + अमात्यपदे + अध्यारोपितः + त्वम् ।

यच्छरीरस्य—यत् + शरीरस्य ।

संजीवकस्तावच्छष्पभोजी—संजीवकः + तावत् + शष्पभोजी ।

सामादिभिरुपायैर्हन्यते—सामादिभिः + उपायैः + हन्यते ।

तदद्यास्यामिषेण—तत् + अद्य + अस्य + आमिषेण ।

समीपस्थोऽनेकशाखासनाथोऽतिघनतरपत्रच्छन्नः—समीपस्थः + अनेकशाखासनाथः + अतिघनतरपत्र + छन्नः ।

शनैस्तन्न्यग्रोधपादपदुर्गम्—शनैः + तत् + न्यग्रोधपादपदुर्गम् ।

मेघवर्णोऽन्वयागतानुज्जीवि-संजीव्यनुजीवि-प्रजीवि-चिरजीविनाम्नः—मेघवर्णः + अन्वय + आगतान् + उज्जीवि-संजीवि + अनुजीवि-प्रजीवि-चिर-जीवि-नाम्नः ।

वाङ्मात्रेणापि—वाक् + मात्रेण + अपि ।

आगामिन्याममावस्यायामहम्—आगामिन्याम् + अमावस्यायाम् + अहम् ।

स्थिरजीविनमुच्छृङ्खलवचनैर्जल्पन्तमवलोक्य—स्थिरजीविनम् + उच्छृङ्खलवचनैः + जल्पन्तम् + अवलोक्य ।

अथोलूकाधिपस्तदाकर्ण्यास्तगमनवेलायाम्—अथ + उलूक + अधिपः + तद् + आकर्ण्य + अस्तगमनवेलायाम् ।

नीयमानश्चान्तर्लीनमवहस्य—नीयमानः + च + अन्तर्लीनम् + अवहस्य ।

पुत्रपौत्रादिक्रमेणाचलच्छत्रासनश्रीश्चिरम्—पुत्रपौत्र + आदिक्रमेण + अचल + छत्रासन-श्रीः + चिरम् ।

जम्बूच्छायास्थितौ—जम्बू + छायास्थितौ ।

धिग्धिङ्मूर्ख—धिक् + धिक् + मूर्ख ।

कदाचिद्दायादैरुद्वेजितोऽरघट्टघटीमारुह्य—कदाचित् + दायादैः + उद्वेजित + अरघट्टघटीम् + आरुह्य ।

कृच्छ्रादभ्यर्थितास्तद्गृहे—कृच्छ्रात् + अभि + अर्थिताः + तत् + गृहे ।

कदाचिच्छय्यायाम्—कदाचित् + शय्यायाम् ।

सुवर्णसिद्धिस्तस्यान्वेषणपरस्तत्पदपंक्त्या—सुवर्णसिद्धिः + तस्य + अन्वेषणपरः + तत्पदपंक्त्या ।

तथाहमेतज्जानामि—तथा + अहम् + एतत् + जानामि ।

गच्छेदध्वानम्—गच्छेत् + अध्वानम् ।

नैकश्चार्थान्—न + एकः + च + अर्थान् ।

---

## पञ्चतंत्र-कथासार अन्तर्गत कतिपय कठिन शब्दों के अर्थ

### कथामुखम्

**दुर्मेधस**—वि., दुष्ट बुद्धि वाले ।

**आवहति**—धारण करना है, देता है ।

**पञ्चशती**—पञ्चानां शतानां समाहारः (द्वि समास) पाँच सौ ।

**श्रूयते**—सुना जाता है ।

**प्रतिबोधनम्**—नपुं., ज्ञान ।

**अशाश्वतः**—वि., नाश होने वाला ।

**संसदि**—(संसद् की सप्तमी का एकवचन) सभा में ।

**शासनशतेन**—सौ ग्रामों के आधिपत्य से ।

**आहूय**—बुलाकर ।

**निर्वृतिम्**—प्रसन्नता को ।

**प्राक्**—अव्यय., शीघ्र ।

### मित्रभेदम्

**आदिमः**—वि., पहला ।

**पिशुनः**—वि., चुगलखोर ।

**भूरि**—वि., पर्याप्त, बहुत ।

**स्वजनायते**—अपनों जैसा व्यवहार करता है, अपना बन जाता है।

**निक्षेपप्रवेशः**—धरोहर रखकर कर्ज देने का धन्धा।

**कूटतुलामानम्**—नपुं., कम तोलना

**धूर्वोढारौ**—जुए को उठाने वाले।

**कच्छः**—पुं., किनारे के पास की दलदल भूमि।

**युगभङ्गम्**—जुए का तोड़ना।

**सार्थिकाः**—साथियों ने।

**बह्वपाये**—वि., बहु+अपाये, भारी आपत्ति वाले।

**आप्यायितशरीरः**—आप्यायित शरीर यस्य, स्वस्थ शरीर वाला।

**पीनः**—वि., मोटा ताज़ा।

**ककुद्मान्**—ककुद्मत्., डांड (पीठ पर मोटा मांसपिण्ड) वाला।

**ससाध्वसम्**—वि., भययुक्त।

**आसनम्**—छावनी या सेना सहित डेरा डालना।

**समासादयिष्यामि**—सम्+आ+सद्॰, प्राप्त करूँगा।

**संश्रयः**—पुं., शरण लेना।

**द्वैधीभाव**—फूट डलवा देना।

**साचिव्यम्**—मन्त्रित्व।

**उत्सङ्गः**—गोद।

**सुकृष्टात्**—अच्छी तरह जोती हुई (बंजर भूमि) से।

**पुष्कलम्**—बहुत।

**कुलिशम्**—वज्र।

**निष्कोषणम्**—कुरेदना।

**कण्डूयनकम्**—खुजलाना।

**अन्वयः**—खानदान, वंश।

**त्रपुणि**—लाख में।

**परिहीयते**—नष्ट हो जाता है।

**धैर्यावष्टम्भः**—पुं., धैर्य धारण करना।

**उभयवेतन**—वि., दोनों ओर से वेतन लेने वाला, एक प्रकार का दूत।

**प्रभञ्जनः**—पुं., वायु।

**साक्षेपम्**—फटकारते हुए, भिड़कर।

**गतायुषम्**—मृत, मरा हुआ।

**प्राकृतम्**—साधारण, स्वाभाविक, लौकिक।

**प्रतिपन्नम्**—मान लिया है।

**दापयितव्या**—दिलाना चाहिए।

**सांनिपातिके**—सन्निपात (वह रोग जिसमें—कफ, वात और पित्त—का कोप हो जाय) संबन्धी।

व्यज्यते—प्रकट होती है।

सप्रश्रयम्—क्रि. वि., विनयपूर्वक, नम्रता सहित।

स्तोकम्—थोड़े।

अरण्य-धर्मः—पुं., हिंसक-वृत्ति, मारने का स्वभाव।

ग्राम्य-धर्मः—शान्त तथा नियमित जीवन।

क्षुत्क्षामकण्ठौ—वि., भूख से पीड़ित।

महामात्राः—मन्त्री तथा अन्य उच्च अधिकारी वर्ग।

व्यतिकरः—विपत्ति।

न्यग्रोधः—पुं., गूलर का पेड़।

हेतिः—हथियार।

प्रकरः—समूह, ढेर।

प्रायोपवेशनम्—मरणव्रत।

अनावृष्टिः—वर्षा का न होना।

निर्विण्णः—ऊब गया हुआ, तंग आया हुआ।

व्यञ्जनम्—चटनी।

आससाद—पहुँच गया।

उत्पतितौ—उड़ गए।

## मित्रसम्प्राप्तिः

महोच्छ्रायवान्—बड़ा ऊँचा।

नाना विहंगमः—अनेक पक्षियों से।

आखुः—चूहा

स्फुटितचरणः—स्फुटितौ चरणौ यस्य (बहुव्री.), फटे हुए पैरों वाला।

कालकूटः—भयानक विष जिसे शिव जी ने पिया था।

सिन्दुवारः—निर्गुण्डी का फूल।

अर्गला—भारी रुकावट, बाधा।

हालाहलः—भयानक विष।

प्रोद्यतयष्टिः—डंडा लेकर।

हेलया—हेला आराम से।

कृतान्तः—यमराज।

वराकाः—बेचारे।

परत्र—अव्य., परलोक में।

व्याहरतिः—बोलता है।

कुधीः—कुत्सिता धीर्यस्य (बहुव्री.), दुष्ट।

सन्दध्यात्—सन्धि करे।

साप्तपदम्—वि., सात कदम चलने से होनेवाली (मैत्री)।

बुभुक्षा—भूख।

वलिः—भोजनादि का भाग जो पक्षियों तथा पशुओं को दिया जाता है।

शस्यम्—नपुं, फसल।

आकाशगतिः—वि., उड़ने वाला, आकाशे गतिर्यस्य।

तुहिनम्—नपुं., वर्फ, हिम।

सम्यक्—भली भान्ति, अच्छी तरह।

अभ्याशम्—अव्य., समीप।

मठायतनम्—मन्दिर।

नागदन्तः—पुं., खूँटी।

प्राघुणिकः—पुं., अतिथि, अभ्यागत, मेहमान।

कुशसंस्तरः—कुशा की शय्या।

उत्प्लुत्य—उछल कर।

लुञ्चितान्—वि., छिले हुए।

काकोलूकीयम्

हुताशनः—पुं., अग्नि।

अतिघनतरपत्रच्छन्नः—घने पत्तों से भरा हुआ।

समन्तात्—चारों ओर।

निर्वायसम्—वायसानाम् अभावो निर्वायसम् (अव्ययीभाव समा.), कौओं से ख़ाली।

कदनम्—नपुं., विनाश हत्या।

अन्वयागतान्—वंशपरम्परागत

निदर्शनम्—प्रमाण, मिसाल।

कण्ठीरवः—पुं., सिंह।

अपसरणम्—नपुं., यात, गमन।

नक्रः—पुं., घड़ियाल, मगरमच्छ।

प्रच्युतः—हटा हुआ।

निर्वाते—वायुहीन स्थान।

चिरन्तन—वि., पुराना।

उच्छिद्यते—उखाड़ा जाता है, मारा जाता है।

प्रणिधिः—पुं., गुप्तचर।

तीर्थानि—मन्त्री पुरोहित आदि अठारह प्रकार के राज कर्मचारी

अन्तर्वेशिक—पुं., अन्तःपुर (रनिवास) में रहने वाला कर्मचारी।

समाहर्तृ—पुं., कर लेने वाला।

सन्निधातृ—पुं., कर रखने वाला

प्रदेष्टृ—पुं., मार्ग दिखाने वाला।

ज्ञापक—पुं., समाचार ले जाने वाला।

प्रोत्कटभृत्यः—पुं., भयंकर काम करने वाला।

कंचुकी—पुं., (कंचुकिन्) रनिवास में नियुक्त वृद्ध कर्मचारी।

सांवत्सरिक—पुं., ज्योतिषी।

अंगरक्षक—पुं., शरीर रक्षक।

## लब्धप्रणाशम्

हीयते—नष्ट होता है।

वालुका—रेत।

भुनज्मि—भोग करूँ, आनन्द लूँ।

प्रतिपन्नः—स्वीकार किया हुआ, माना हुआ।

मिथ्याग्रहम्—दुराग्रह, हठ।

निष्कृतिः—पुँ., छुटकारा।

सुरापः—पुँ., शराबी।

वन्दनमाला—स्त्री., झण्डियाँ, वन्दनवार।

भोजयते—भोजन करवाता है।

प्लाव्यते—भिगोया जा रहा है।

प्रत्युत्पन्नमतिः—सूझ-बूझ वाला, हाज़िरजवाब।

चंक्रमणम्—छलांग।

निकृन्तति—काटता है।

अनशनम्—नपुं., भूख-हड़ताल।

आख्याहि—कहो, बतला दो।

एति—जाता है।

दायादाः—पिता-पितामहों से प्राप्त होने वाली सम्पत्ति के हिस्सेदार, भाई।

संश्रयः—पुं, निवास-स्थान।

कवलितम्—ग्रास कर लिया, खा लिया।

गोधा—स्त्री., छिपकली।

## अपरीक्षितकारकम्

संप्रधार्य—निश्चय करके।

उत्सृजामि—त्याग देता हूँ।

क्षपणकः—दिगम्बर, जैन साधु।

नग्नकाः—पुं., नंगे जैन साधु।

जिन—पुं., जैन महामुनि।

सप्रश्रयम्—विनयपूर्वक।

विहरणक्रिया—जैन साधु घूम करके भोजन करते हैं अतः उनका भोजन 'विहरण-क्रिया' कहा जाता है।

श्रावकः—जैनधर्म का अनुयायी, जैन सेवक।

कर्पटानि—वस्त्र।

खादिरमयम्—खैर की लकड़ी का बना हुआ।

कोटरक्षपालः—पुं., कोतवाल।

रुधिरप्लावितदेहाः—जिनके शरीर रुधिर में लथपथ हैं।

धर्माधिष्ठानम्—धर्मस्य अधिष्ठानम्, न्यायालय।

**ब्राह्मणसुत-नकुल-कथा**

प्रसूय—जन्म देकर।

स्तन्यदानम—दूध पिलाना।

अभ्यङ्गः—मालिश।

दारकः—लड़का।

गृहीतनिर्वापः—भिक्षा लेकर।

---

## पंचतन्त्र-कथासार के कुछ उपयोगी अभ्यास

# मित्रभेद

### अभ्यास १

१. सकलकलापारंगतपरमदुर्मेधसाः, पञ्चशती, धर्मोपार्जितभूरिविभवः, भयव्याकुलमनाः, करटकदमनकौ, बुद्धिप्रागल्भ्यम्—इन पदों का विग्रह करो और समास बताओ।

२. शास्तृ, विद्वस्, राजन्, सभा—इन शब्दों के सब विभक्तियों में रूप लिखो।

३. वह्, ब्रू, हन्, कृ, पत्, भक्ष, जन्—धातुओं के रूप लट् लकार में लिखो।

४. विष्णुशर्मा के विषय में तुम क्या जानते हो? उसे चाणक्य क्यों कहते हैं?

५. निम्नलिखित पर व्याकरण संबन्धी नोट लिखो—

वध्यः, अपत्यानि, हेतुभिः, द्रष्टुम्, विहस्य, ब्रुवाणः।

६. निम्नलिखित धातुओं के रूप लिङ् लकार में लिखोः—
 या, ब्रू, स्था, चिन्त्, श्रु, रुद् ।

७. इन रिक्त स्थानों को पूर्ण करो :—
 आवयोर्भक्षितशेष......अस्त्येव ।
 तौ च......मन्त्रयतः ।
 तर्हि......ते पन्थानः ।

## अभ्यास २

१. मित्र भेद की कथा संक्षेप से लिखो ।

२. इन शब्दों के अर्थ लिखोः—
 कुलीरक, शिला, ग्रीवा, मातुल, कनकसूत्र, वायसदम्पति ।

३. इन में सन्धिच्छेद करो :—
 अतोऽहम्, ग्रीवेयम्, किंचिदिह, जलचरास्तेन, कंचिन्नगरम् ।

४. इन शब्दों के प्रथमा, द्वितीया, तृतीया में रूप लिखो :—
 शिला, वायस, संजीवक ।

५. धनार्जन के कितने उपाय हैं ?
 वाणिज्य के भेदों का वर्णन करो ।

## अभ्यास ३

१. कृदन्त और तद्धित प्रत्ययों में क्या भेद है ?
 दोनों के पाँच-पाँच उदाहरण दो ।

२. इन धातुओं के त्वान्त और तुमुन्नन्त रूप लिखो :—
 चर, जन, श्रु, ब्रु, भू, स्था ।

३. रुच प्र+भू, दय, स्मृ, मुच् इन धातुओं के साथ किन विभक्तियों का प्रयोग होता है ?

४ इन शब्दों की रचना बताओ:—
हन्यात, आप्नोति, आरोपयति, दर्शय, गच्छेत्, सन्तु।

५. मित्र भेदान्तर्गत कथाओं का संक्षेप से वर्णन करो।

६. इन वाक्यों के विरोधी शब्द लिखो —
हृष्टमना, सत्यमुक्तम, मध्याह्नसमय, शशकाधम, विश्वासस्थान।

## अभ्यास ४.

१. इन शब्दों के अर्थ लिखो :—
वक्तुमनाः, चतुष्कर्णतया, सामादिभिरुपायै, वज्रपातदारुणवचनम्, समानशीलव्यसनेषु सख्यम।

२. इन शब्दों की रचना बताओ —
घ्नन्ति, प्रकोपितः, विधातुम्, सम्पत्स्यते, प्रबोध्य।

३. इन धातुओं के रूप लट्, लोट्, लङ् और विधिलिङ् में लिखो:—शुष, कृ, स्था, पा (पिब्), घ्रा (जिघ्र)

४. इन पदों का विग्रह करो :—
नीतिबीजनिर्वापणम्, सुखाश्रयौ, मांसाशिनः, संवृतशरीरः, खरनखरविकर्तितपृष्ठः, शिष्टजनरहितस्य।

५ इन वाक्यों को शुद्ध करो —
वने रामः सीतां स्मरति। स मां शतं धारयति। त्वं शिरसि खल्वाटः। अहं नेत्रेण पश्यामि।

# मित्रसंप्राप्तिः

१. इन धातुओं में शत्रन्त तथा तव्यान्त रूप लिखो—त्यज्, स्मृ, रुद्, क्रीड्, चुर्।

२. इन शब्दों के विभक्तिवचन लिखो—पक्षिणः, अमी, सुहृद्, गृहवताम्, महात्मनाम्।

३. इनकी रचना बताओ—आस्ते, आसाद्य, निवृत्तः, विचिन्त्य, क्षेप्स्यति।

४. इन पदों के अर्थ लिखो—
वैरं द्विविधं सहजं कृत्रिमं च। विदग्ध वचनोऽयम्। पाशाः प्रगुणीकृताः। देवतायने संमार्जनोपलेपनमण्डनादिकं समाज्ञापयति। तीर्थ यात्रा प्रसंगेन प्राघुणिकः समायातः।

५. मित्र संप्राप्ति कथानक के मुख्य पात्रों का चरित्र वर्णन करो।

६. परिव्राजक मूपक की कथा संक्षेप से लिखो।

---

# काकोलूकीयम्

१. विश्वसेत्, उपेक्षेत, हन्यते, प्रशस्यते, प्रशाम्यति—इन क्रियापदों के धातु, लकार, पुरुष तथा वचन बताओ।

२. इन शब्दों के अर्थ लिखो तथा उनका वाक्यों में प्रयोग करो—सौहृदम्, चारा, कंचुकी, भिषक्, विलासिनी।

३. इन समस्त पदों का विग्रह करो तथा समास भी बताओ—काकोलूकीयम्, मदहीनः, सन्धिविग्रहयानानि, निशागमः, निर्वायसम्।

४. नीचे लिखे धातुओं के क्त्वा और तुमुन्-प्रत्ययान्त रूप लिखो :—दृश्, कृ, क्री, रच्, चुर्।

५. नीचे लिखे शब्दों का लिङ्गनिर्देश करो—हुताशन, रोग, सचिव, सखा, वह्नि।

६. इन शब्दों पर संक्षिप्त नोट लिखोः—

संधि, विग्रह, यान, आसन, संश्रय, द्वैधीभाव।

७. तीर्थों से क्या अभिप्राय है? उनके कितने भेद हैं? उनमें छः की व्याख्या करो।

८. इन वाक्यों के विरोधी शब्द लिखोः—

पातालगंगाजल, स्थलमध्यगतः, चन्द्रमण्डलः, यथार्थवादिन्, अतीतदिवसे।

९. इन शब्दों के अर्थ लिखो—निर्वाच्यसम्, समाहर्ता, सन्निधाता, स्थानचिंतक, व्यपदेश, मूलोत्खाताः, कुलाय, महासत्वाः, निहतकण्टकम्, मत्तकरिकर्णचंचलाम्।

१०. काकोलूकीयम् की कथा संक्षेप से लिखकर बताओ कि पहले शत्रु और बाद में मित्र बनने वाले का विश्वास क्यों नहीं करना चाहिए?

## लब्धप्रणाशम्

१. संधि करो—अथ+इदम्, यस्य+अयम्, रक्तमुखः+वानरः, अभ्यागतः+अतिथिः, प्राय+उपवेशनम्।

२. इन शब्दों के अर्थ लिखो—

समुद्रोपकण्ठे, अभ्यागतः, जरामरणरहिताः, रचितचतुष्का, प्राघुणिक न्यायेन, आततायी।

३. इन शब्दों की रचना बताओ।

अनुभूय, प्रयच्छति, भुनज्मि, लाव्यते, त्वर्यताम्, आसादितवान्।

४. वानर और मगरमच्छ की कथा से क्या शिक्षा मिलती है?

५. इन रिक्त स्थानों को पूर्ण करो :—

(१) परं वयं वनचराः······जलान्ते गृहम्।

(२) अगाधे······गच्छन्तं मकरमालोक्य······वानरः प्रोवाच।

(३) ममास्ति परम सुहृद्······नाम वानरः।

## अभ्यास २

१. इन क्रियापदों के धातु, लकार, पुरुष तथा वचन बताओः—

कुर्यात् कारयिष्यामि, भक्षयिष्यामि, कथय, युज्यते।

२. इन शब्दों के विभक्ति तथा वचन बताओ :—

कथयतः, पापचारिन्, अटव्याम्, गोधाम्, ह्रदे।

३. रिक्त स्थानों में उपयुक्त शब्द भरो :—

मदीयं बिलदुर्गं······रुद्धं भविष्यति। अहं······विना नात्र वस्तुं शक्नोमि। सोऽपि घासाभावादति दुर्बलतां······। किमनेन ······युद्धं करोमि।

४. इन धातुओं के रूप लङ् लकार में लिखो :-

चिन्त्, अस्, शुभ्, युध्, रुच्।

५. नीचे लिखे शब्दों के लिङ्ग बताओ :—

तन्त्र, गृह, मित्र, शरीर, शास्त्र।

